**तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।**
**तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥१६८॥**

**इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता ॥**

प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह—तदेवेति । यदौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

**इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यपुत्र श्रीयुतविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥**

**समाप्तश्चायं ग्रन्थः ॥**

दिनकरी ।

स्वीकारात् । तादृशनियमे मानाभावे तु मास्तु तेषां कारणत्वं भेरीदण्डसंयोगादिनिमित्तकारणसहकृतेनाकाशेनैव शब्दोत्पत्तिसंभवादिति । प्रथमादिशब्दानां च स्वकार्यशब्देनैव नाशः चरमस्य तूपान्त्यशब्देनोपान्त्यशब्दनाशेन वा नाश इति ॥ १६७ ॥ मूले तदेवौषधमित्यादिना सैवेयं दीपकलिकेत्यादेः परिग्रहः । ननु तत्रापि व्यक्त्यभेद एव विषयोऽस्त्वतो भावार्थं प्रकाशयति—यदौषधं मया कृतमित्यादिना । अत्र च स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासाहितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्त्यभेदो विषयः किंतु तत्सजातीयाभेदो विषय इति भावः ॥ १६८ ॥

भानुं प्रणम्य परिभाव्य च शास्त्रसारं
मुक्तावलीकिरण एष पितृप्रदिष्टः ।
सद्युक्तिभिर्दिनकरेण करेण सोऽयं
नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु ॥
मुक्तावलीप्रकाशो यः स्वाज्ञानतिमिरापहः ।
तेन सन्तोषमायातु नीलकण्ठः सतीप्रियः ॥

**इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्टतनूजश्रीमद्दिनकरभट्टविरचिते न्यायसिद्धान्तमुक्तावलीप्रकाशे गुणनिरूपणम् ॥**

**समाप्तश्चायं ग्रन्थः ॥**